# अथ योहिप्राप्ति शिक्षा

श्रीमद्गणेशं प्रणिपत्य देवान्श्रीसूर्यनारायणसुप्रसादात्
वक्ष्ये क्रियाया स्वरलक्षणं तद्यद्धोमकन्यापुरसूरिभट्टः
१
तस्माच्चत्वारिपरश्चेदहरच्चाद्युदात्तवान्
प्रायच्छत्त्रिर्यवं तस्मात्तस्मै त्वेष परस्त्वसि  २
प्राविशत्तं प्राह तादृग्यत्सोमः प्राजनयत्तथा
प्रावेशयन्त्याददत तत्प्रायुञ्जत तेन च  ३
मिन्दाभून्मायासीत्कुंभ्यादादस्ति स्यवपूर्वकः
भ आशयाद्धि पूर्वश्च परिभूरसि सादिगम्  ४
जहीन्द्रश्शृणुते मान्तश्चिनुतेऽपात्मशीर्ष च
प्रोक्षितं वीक्षितायात्र आदिशब्दावुदात्तगौ  ५
चिनुते थो सर्वं नीचं यच्छब्दात्पर इत्यपि
सांहितेन स्वरेणापि ज्ञेयश्शेषस्वरो बुधैः  ६
यद्यावच्छब्दकौ यत्र यथाद्युच्चो यतो यदि
यदा यर्हि ह्यधश्चादिराद्वादशात्क्रियोच्च भाक्  ७
या प्रजाः पराबहुर्वै यो वै दे प्राण उत्तरः
य एवमहर्यत्सोमः प्रयत्त्रिः प्राययद्धिमन्  ८
यन्मैत्रावरुण यो वैसौ यथाक्षंश्च योऽग्निषः
ह्येत विद्भिर्यथानसि त्रिभवेद्यत्पुनश्चितिम्  ९
आयुर्वा अन्यशब्दादिस्सोमं वारुण एष ते
पृथिव्यै त्वेति सोमेऽपि न कुर्यात्पूर्वयापि च  १०
वत्सञ्चाधिश्रयत्यन्तं नाववे प्रपुरोदये

अपयुष्मदाद्यावर्ततान्तमवर्ण आदितः ११
नक्षोधुकश्च सा सोममद्ध्वानोग्निः पुरा सभाम्
अग्निरमुष्मिन्देवानां त्रीणि च शकथा गवि १२
सोमोऽग्निरेवास्मा ऊर्ध्वस्सत्यादनस्थिकेन च
आदित्या अमुष्मिंश्चाच्युत्पयो विश्वेऽन्वतिष्ठत्तत् १३
वान्यशब्दौ पूर्वपक्षे पूर्वेष्वा पञ्चमस्तथा
सव्यो न यज्ञं वस्वी च द्विर्निना नायतानृणम् १४
यवं सौदासानभोर्ध्वो रथचक्रपरासु च
संबन्धश्चान्तसान्निध्ये तुल्ययोरादिरुच्चवान् १५
मयति वषट् स्तृणुते तृतीषोरुन्ध एव च
युनक्ति प्रजापास्यस्तु पाह्यादि यजुरादि चेत् १६
न घ्नीरायृषभं द्वेद्वेधः क्रिया चान्यश्रुतींग्यभाक्
यथा मनुर्मनुष्याश्च योदयाजीसयो यथा १७
शीर्ष्णादिध्रुव ऊषाश्चान्वञ्चावाज्यं पुरीष च
अङ्गारेष्वारुणो वेणोरजा वेदिः परं च यत् १८
उपह्यात्मनो देवानां सुवर्गोऽश्वाच्च चक्षुषी
रुद्रो मृन्मयमूर्ध्वो हि नीचं दधाति केवलम् १९
चित्यामन्यां च नान्यां च पुरस्तादन्या यदीतरम्
घार्यारभ्यापितन्मध्ये तच्छब्देऽनीचके स्थिते २०
संख्या शब्देऽप्यनेदन्ते सान्निध्यं नैकमष्टकम्
अपूर्वेऽपि क्रिया नित्यमित्याद्यन्ययजुः स्थितम् २१
न हि स तं हि ते तां हि तस्य माया हि तत्तथा

यान्ते गच्छन्तु यस्तस्यां यत्तद्येषां हि चात्र हि २२
यो यक्ष्ये यस्यैवं यत्तं यावानेव य इत्यपि
तत्स्वरसूचनार्थं हि बालानामिति वर्णितः २३

योहिप्राप्तिमूलं समाप्तम्

Reference:
*Yohi Prāpti Mūlam*, Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 2 folios, Palm-leaf bundle III 8/133, pp. 22-23, 23 verses.
*Yohi Bhāṣya*, Staats-Universitaets Bibliothek, Hamburg, Germany, Grantha script on palm leaves, 5 folios, Palm-leaf bundle III 8/133, pp. 161-170.
*Yohi Bhāṣya*, Government Oriental Library, Mysore, Telugu script on palm leaves, 8 folios, #144 (10).
*Yohi Bhāṣya*, Deccan College Library, Pune, #9814, Devanagari script on paper, 5 folios (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Government Oriental Manuscript Library, Chennai, #861, Grantha script on palm leaves, 3 folios (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Government Oriental Manuscript Library, Chennai, #991, Telugu script on palm leaves, 13 folios (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Sri Venkateswara University Oriental Research Institute Library, Tirupati, Manuscript #4446d, 11 folios, Grantha script on palm leaves (http://ihg.cdacb.in/).
*Yohi Bhāṣya*, Vishveshvaranand Vedic Research Institute, Hoshiarpur, Manuscript 3551, 7 folios, Devanagari script on palm leaves (http://ihg.cdacb.in/).